परोक्षं वा किं (om. CC*) न सह्यते॥ — p. 59, 3—13. नैतावन्मात्रेण तुष्टिर्भविष्यति। [एतेनैव तुष्टो (C तुष्टा) भविष्यतीति वा पाठः] ॥ — विरम दुर्ललिते। एतावदवस्थां गतयापि मया क्रीडसि॥ — प्रियंवदे एष तपस्विमृगपोतक इतस्ततो दत्तदृष्टिर्नूनं मातरं प्रभ्रष्टामनुसरति। तत्संयोजयाम्येनम्॥ — सखि चपलः खल्वेषः। नूनं निवारयितुमेकाकिनी न पारयिष्यसि। तदहमपि सहायत्वं करिष्यामि। [तवेत्यर्थः] ॥ इतो ऽन्यतो युवयोर्गमनं नानुमन्ये। ततो ऽसहायिन्यस्मि॥ — त्वमिदानीमप्यसहायिनी यस्याः समीपे पृथिवीनाथो वर्तते॥ — p. 60, 1. कथं गते प्रियसख्यौ॥ — p. 60, 5. संचारयामि करोमीत्यर्थः॥ — p. 60, 8. न माननीयेष्वात्मानमपराधयिष्यामि॥ — p. 60, 14. मुञ्च मुञ्च। न खल्वात्मनः प्रभवामि। [येन त्वन्मनोरथपूरणं क्रियत इति भावः] अथ वा सखीमात्रशरणा किमिदानीमत्र करिष्यामि। [अतो यातुं देहीति वाक्यतः। हृदयं त्वभ्युपगम एव।] — p. 60, 17. न खल्वहं महाभागं भणामि। दैवं [प्राक्तनकर्म] उपालभे [निन्दामि] ॥ — p. 61, 2. कथमिदानीं नोपालप्स्ये यदात्मनो ऽनीशां मां परगुणैर्लोभयति॥ — p. 61, 11. पौरव रक्ष विनयमितस्ततः ऋषयः संचरन्ति॥ — p. 61, 18. पौरव अनिच्छापूरको (CC* पूर्वको) ऽपि संभाषणमात्रेण परिचितो ऽयं जनो न विस्मर्तव्यः॥ — p. 62, 5. हा धिक्। एतच्छ्रुत्वा न मे चरणौ पुरोमुखौ प्रसरतः। भवतु। एतैः पर्यन्तकुरवकैरपवारितशरीरा प्रेक्षिष्ये तावदस्य भावानुबन्धम्॥ — p. 62, 11. इदं श्रुत्वा नास्ति मे विभवः [सामर्थ्यं] गन्तुम्॥ — p. 63, 1. अम्मो दौर्बल्यशिथिलतया भ्रष्टमपि मृणालवलयं न मया परिज्ञातम्॥ — p. 63, 8. अतः परमसमर्थास्मि विलम्बितुम्। भवत्वनेनैवापदेशेन [व्याजेन] आत्मानं दर्शयिष्यामि॥ — p. 63, 14—64, 2. आर्य अर्धपथे स्मृत्वा एतस्य हस्तभ्रंशिनो मृणालवलयस्य कृते [निमित्तं] आगतास्मि। आख्यातमिव मे हृदयेन त्वया गृहीतमिति। तस्मान्निक्षिपैतत्।

मा माम् (om. CCa) आत्मानं च मुनिजनेषु प्रकाशयिष्यसि॥ — p. 64, 4. 6. 11. केन पुनः॥ — का गतिः॥ — त्वरतां त्वरतामार्यपुत्रः॥ p. 65, 1. यथा ते रोचते॥ — p. 65, 7. न तु (sic) तावदुत्प्रेक्ष्ये (sic; r. न तावदेनं प्रेक्षे)। पवनोत्कम्पिना कर्णोत्पलरेणुना कलुषीकृता मे दृष्टिः॥ — p. 65, 10. ततोऽनुकम्पिता भवेयम्। किं पुनस्ते न विश्वसिमि॥ — p. 65, 12. अयमेवात्यादरोऽविश्वासजनकः॥ — p. 66, 5. प्रतिज्ञामन्थर इवार्यपुत्रः॥ — p. 66, 8. भवतु। प्रकृतिस्थदर्शनास्मि संवृत्ता। लज्जे पुनरनुपकारिणी उपकारिणः [प्रियकारिणो वा] आर्यपुत्रस्य॥ — p. 66, 12. ननु निश्चये। न विति शङ्करः॥ — p. 66, 13. असंतोषे पुनः किं करोति॥ — p. 66, 15. चक्रवाकवधूरामन्त्रयति सहचरम्। उपस्थिता रजनी॥ [गौतमी। तत्प्रवेशं सख्यौ सूचितवत्यौ] ॥ — p. 67, 1. आर्यपुत्र एषा खलु तातकण्वस्य धर्मभागिनी [कनीयसी वा] आर्या गौतमी मम प्रवृत्तान्तोपलम्भननिमित्तमागता। तद्विटपान्तरितो भव॥ — p. 67, 4—12. जात (CCa जाते)। [पुत्रि जातशब्देनापत्यमात्रमुच्यते॥ जाते इति शङ्करः] इदं शान्त्युदकम्। असुस्थात्र देवतासहायिनी [एकाकिनी] तिष्ठसि॥ इदानीमेव प्रियंवदानुसूये मालिनीमवतीर्णे॥ निराबाधा त्वं चिरं जीव। अपि लघुसंतापानि तवाङ्गानि॥ आर्ये अस्ति विशेषः॥ परिणतो दिवसस्तदेहि (CCa तदिति) उटजं गच्छावः॥ हृदय प्रथमं सुखोपनते मनोरथे कालहरणं करोषि [कृतवदसि]। सांप्रतमनुभव तावत्ते कृतम्॥ — p. 68, 1. 2. om. CCa. (लतागृह संतापहारक आमन्त्रये त्वां पुनरपि परिभोगार्थम्) — p. 70, 2—12. प्रियंवदे यद्यपि गान्धर्वेण विवाहेन निर्वृत्तकल्याणा (CCa निवृ॰) प्रियसखी शकुन्तलानुरूपभर्तृभागिनी संवृत्ता तथापि न निर्वृतं मे हृदयम्॥ कथमिव। [किमिति वा] ॥ — अद्य स राजर्षिरिष्टिपरिसमाप्तौ ऋषिभिः प्रेषित आत्मनो नगरं प्रविश्यान्तःपुरिकाशतसमागमादिमं जनं स्मरति न वेति॥ —

अत्र तावद्विस्रब्धा [निःशङ्का] भव। न हि तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति। एतावत्पुनश्चिन्तनीयम्। तातस्तीर्थयात्रातः प्रतिनिवृत्त इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यते इति॥ — p. 71, 1—10. यदि मां पृच्छसि तदानुमतमिदं तातस्य भविष्यति [1]॥ — कथमिव॥ — किमन्यत्। अनुरूपाय कन्या प्रतिपादनीयेति अयं तातसंकल्पः। तं यदि दैवमेव संपादयति ननु कृतार्थो गुरुजनः॥ — एवमेतत्। सखि अवचितानि बलिकर्मपर्याप्तानि कुसुमानि॥ — ननु शकुन्तलया सौभाग्यदेवता अर्चनीया। तदपराण्यवचिनुवः॥ युज्यते॥ — p. 71, 12—15. अतिथिनेव निवेदितम्॥ — ननूटजे संनिहिता शकुन्तला। आं। [स्मृतौ] अद्य पुनरसंनिहिता हृदयेन। तेन हि भवत्वेतैः कुसुमैः प्रयोजनम्॥ — p. 72, 7—16. हा धिक् हा धिक्। तदेव संवृत्तम्। कस्मिन्नपि पूजार्हे ऽपराद्धा शून्यहृदया प्रियसखी॥ — सखि न खलु यस्मिंस्तस्मिन्वा। एष खलु सुलभकोपो दुर्वासा महर्षिः। तथा [पूर्वानुभूतप्रकारेण] अयमविरला [निरवकाशा] त्वरिता च ईदृश्या गत्या [2] प्रतिनिवृत्तः। [विरलपादोद्धारया (C °पादपधारया C. °पादपधावया) गत्येति च पाठः] ॥ — को ऽन्यो हुतवहाद् दग्धुं प्रभवति। तद्गच्छ पादयोः पतित्वा निवर्तय [अर्थादेनम्] यावदहमस्यार्घोदकमुपकल्पयामि॥ — अम्मो आवेगस्खलितायाः प्रभ्रष्टमग्रहस्तान्मे कुसुमभाजनम्॥ — p. 73, 1—10. शरीरीव कोपः कस्य सो ऽनुनयं गृह्णाति। किं चित्पुनः सानुकम्पः कृतः॥ — एतदेव तस्मिन्बहुतरम्। तत्कथय [कथं प्रसादित इत्यर्थः] ॥ — सखि स यदि कथमपि निवर्तितुं नेच्छति तदा पादयोः प्रणिपत्य विज्ञापितो मया। भगवन्प्रथमभक्तिमवेक्ष्य

---

1) इदं and भविष्यति probably are explanatory glosses and therefore ought to be included in brackets.

2) From this one might conclude that Candraçekhara's reading was: अविरलगुरिदाए गदीए ॥ The reading of the text means: „rarely lifting up the foot" i. e. going by great leaps.

अथ तवाविज्ञातप्रभावपरमार्थस्य दुहितृजनस्य भगवतायं प्रथमापराधो मर्षितव्य इति॥ — ततस्ततः॥ — ततः स न मे वचनमन्यथा भवितुमर्हति। किं त्वाभरणाभिज्ञानदर्शनादस्याः शापो निवर्तिष्यत इति मन्त्रयन्नेवान्तर्हितः॥ — p. 73, 11—74, 2. शक्यमिदानीमाश्वसितुम्। अस्ति तेन राजर्षिणा संप्रस्थितेनात्मनो नामाङ्कितमङ्गुरीयकं स्मरणीयेति (sic) शकुन्तलाया हस्ते स्वयमेव पिनद्धम्। तदेष एव तस्मिन्स्वाधीन उपायो भविष्यति॥ — p. 74, 3—9. एहि अस्या देवकार्यं तावन्निवर्तयावः॥ — अनुसूये प्रेक्षस्व तावत्। वामहस्तविनिहितवदनालिखितेव प्रियसखी तद्गतया चिन्तया आत्मानमपि न विभावयति किं पुनरतिथिविशेषम्॥ — प्रियंवदे द्वयोरेवावयोर्हृदय एष शापवृत्तान्तस्तिष्ठतु। रक्षणीया खलु प्रकृतिपेलवा प्रियसखी॥ — कस्तावदुष्णोदकेन नवमालिकां सिञ्चति॥ — [अत्र प्रवेशक इति शङ्करः] — p. 75, 15. एवमपि नाम विषयपराङ्मुखस्य जनस्य एवं [इदं वा] निपतितं यथा तथाविधेन राजर्षिणा शकुन्तलाया अनार्यमाचरितमिति॥ — p. 76, 1—77, 2. ननु प्रभातवेला। तन्निद्रां त्यजामि। [तत्प्रतिबुध्ये वा] अथ वा प्रतिबुद्धापि किमिदानीं करिष्यामि। न मे उचितेष्वपि प्रभातकरणीयेषु हस्तौ प्रसरतः। तत्सकाम इदानीं कामो भवतु। येन शुद्धहृदया प्रियसखी असत्यसन्धे [मिथ्याप्रतिज्ञे] तस्मिञ्जने पदं [स्थानं व्यवसायं वा] कारिता। अथ वा (न तस्य राजर्षेरपराधः om. CC^a) दुर्वाससः शापः खलु एष भवति। अन्यथा कथं राजर्षिस्तादृशं मन्त्रयित्वा एतावतः कालस्य वार्तामात्रमपि न विसर्जयति। इदानीमितस्तस्मिन्नभिज्ञानाङ्गुरीयकं विसर्जयामि। निर्दुःखशीतले तपस्विजने को नामाभ्यर्थ्यताम्॥ [अथ वा निर्दुःखेति शङ्करः पठति [1])]। न च सखीगामी दोष इति व्यवसिता (CC^a व्यवसात्तम्) अपि पारयामः तातकण्वस्य (CC^a ins.

---

1) In Çaṅkara's MS. this sentence is wanting.

वा) दुःस्मन्तस्य (sic) राज्ञः परिणीतामापन्नसत्त्वां [गर्भिणीं] शकुन्तलां निवेदयितुम्। तदत्रेदानीं किं नु खल्वस्माभिः करणीयम्॥ — p. 77, 3—14. त्वरय त्वरय। (Çaṅkara more correctly: त्वरस्व त्वरस्व) शकुन्तलायाः प्रस्थानकौतूहलानि क्रियन्तां [सज्जीक्रियन्तां (CC^a om. सज्जी) वा]॥ — सखि कथमिव॥ — सखि शृणु इदानीमेव सुखसुप्तिकाप्रश्ननिमित्तं शकुन्तलायाः समीपं गतास्मि॥ — ततस्ततः॥ — ततो यावदेनां लज्जावनतमुखीं परिष्वज्य तातकण्व एवमभिनन्दति। वत्से दिष्ट्या। धूमोपरुद्धदृष्टेरपि यजमानस्य पावकमुखनिपतिता आहुतिः। सुशिष्यपरिगृहीता विद्येवाशोचनीयासि मे संवृत्ता। तदद्यैव त्वामृषिभिः परिगृहीतां कृत्वा भर्तुः सकाशं विसर्जयामीति॥ — सखि केन पुनराख्यातस्तातकण्वस्यायं वृत्तान्तः॥ — p. 78, 1—4. अग्निशरणं [अग्न्यागारं] प्रविष्टस्य किल तस्य च्छन्दोवत्या वाचा। [आख्यात इत्यनुषङ्गः। छन्दोवत्या स्वच्छन्दयाकाशवत्येत्यर्थः [1]]॥ — कथमिव॥ — शृणु॥ — p. 78, 7—11. सखि प्रियं मे प्रियम्। किं त्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि॥ — वयं तावत्कथमप्युत्कण्ठां विनोदयिष्यामः [2]। सा तावत्तपस्विनी निर्वृता भवतु॥ — p. 78, 12—79, 2. तेन हि एतस्मिन् (sic) चूतशाखावलम्बिते नारिकेलसमुद्गके एतन्निमित्तमेव मया निक्षिप्ताः कालहरणक्षमाः केशरगुणा [वकुलमालाः [3]] सन्ति। तांस्त्वं नलिनीपत्रसंगतान्कुरु।

---

1) Çaṅkara says: आकाशे सरस्वत्या निवेदित इत्यर्थः।

2) Çaṅkara translates this sentence more correctly by: आवां ... विनोदयिष्यावः॥

3) I do not think Candraç. right in adopting this reading and interpretation. गुण्ड is in Z translated by गुण्डिक; Premacandra p. 84, 18. 19 (ed. Calc. çak. 1786) translates it by रेणु: Damaruvallabha p. 107, 12 by चूर्णिका। Ç.'s चूर्णा: (cpr. S's reading चूर्णा) is certainly a gloss of गुण्ड as मालिका or माला in the Devanâgarî and Drâvidian Recc. is of the wrong reading गुणा. Compare also गुण्डित „dusty", „mealy", Amara 3, 2, 38. Hemacandra v. 1483. (in both passages mentioned along with धूषित) B.R. s. v. गुण्ड् and गुण्डक 1.) The Viçvakosha (MS. Chambers 227 = A, and or. oct. 99. = a) has: गुण्डको (A गण्ड°) मलिने (A मलने) धूल्यौ कलोक्तिस्नेहपात्रयोः॥

अहमपि यावदस्या गोरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानि च मङ्गलसमालभनार्थं (thus both MSS.) विरचयामि। [समालम्भनं (thus both MSS.) वर्धनमित्यर्थः] — p. 79, 4. शार्ङ्गरवशारद्वतप्रधाना इत्यर्थः [1])। शार्ङ्गेति त्रयः शिष्या इति शङ्करः। — p. 79, 6—14. त्वरय त्वरय। [Ç. त्वरस्व] एते खलु हस्तिनापुरगामिनो मुनयः शब्दायन्ते॥ — सखि एहि गच्छावः॥ — एषा सूर्योदय एव कृतमज्जना प्रतीष्टनीवारवाचनाभिः [वाचनं भोज्यम्। प्रहेलकं वाचनकमिति त्रिकाण्डशेषः [2])। भोजनाभिरिति शङ्करधृतः पाठो मन्दः] तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति। तदेनामुपसर्पावः॥ — [हे] भगवत्यो वन्दामि (sic CC^a)॥ — जाते (sic) भर्तुर्बहुमानयुक्तं देवीशब्दमभिगच्छ॥ — p. 80, 1—10. वीरप्रसविनी भव॥ — सखि सुमज्जनं ते भूतम्॥ — स्वागतं प्रियसखीभ्याम्। इतो निषीदतम्॥ — सखि ऋज्वी तावद्भव यावत्ते मङ्गलसमालभनं कुर्वः॥ — उचितमप्येतदद्य बहु मन्तव्यं यतो दुर्लभं तावत्पुनर्मे प्रियसखीमण्डनं भविष्यति॥ — सखि न युक्तं मङ्गलकाले रोदितुम्। हद्धी [खिदे। अहो इति शङ्करः। कष्टमिति व्याचष्टे च] आभरणान्ते (sic; r. °रणार्हं ते) [ऽस्या वा] रूपमाश्रमसुलभैः प्रसाधनैर्विप्रक्रियते [3]) [पीड्यते। विप्रलभ्यत इति शङ्करः पठति।] — p. 80, 13. वत्स हारीत कुत इदम्॥ — p. 81, 1. किं मानसी सिद्धिः॥ — p. 81, 5. चरणानुरागसदृशश्चरणरञ्जनयोग्यः। चरणोपभोगसुलभ इति वा पाठः॥ — p. 81, 8—11. सखि कोटरसंभवापि मधुकरो पुष्परसं [मधु] एवाभिलषति॥ — अनयाभ्युपपत्त्या [वृत्तानुग्रहेण] सूचिता

---

1) The Petersburg Dictionary (s. v. मिश्र) is wrong in attributing here to this word the sense of "accompanied with" etc. It simply stands पूजार्थम् as पादास् does at p. 138, 13. Compare the gaṇa मतल्लिकादि quoted by B-R. Hence by शार्ङ्गरव° only the two pupils are meant and nobody else.

2) Cpr. 2, 9, 14. वाचन also occurs Çak. 119, 14. 120, 1 and Urv. p. 45, 12: वाचणाचं where P's. reading वाअणं is the right one. The commentator explains it by वायनकं.

3) C पसाहनेहि C^a पसाहनेहि.

भर्तुर्गेहे ऽनुगवितव्या राजलक्ष्मीः॥ — p. 81, 14. सखि अननुभूतभूषणो ऽयं जनः कथं त्वामलंकरोतु। चित्रकर्मपरिचयेन [चित्रे यथा द्रष्टव्यं तथेत्यर्थः] इदानीं तवाङ्गेष्वाभरणविनियोगं कुर्वः॥ [चित्तेति शङ्करः पठति मनोविकल्पमयेत्यर्थ इति व्याचष्टे च [1])]॥ — p. 82, 1. जानामि युवयोर्निपुणत्वम्॥ — p. 82, 9—12. सखि शकुन्तले ऽवसितमण्डना [निष्पन्नभूषणा] इदानीं त्वमसि। सांप्रतं परिधेहि एतद्विचित्रं क्षौमयुगलम्॥ — जात (CCa °ते) एष ते आनन्दपरिवाहिणा लोचनेन परिष्वजमान इव गुरुरुपस्थितः। तत्समुदाचारं [अभ्युत्थानादिकं] प्रतिपद्यस्व॥ — p. 83, 1 [हे] जात वरः खल्वेष नाशीः॥ — p. 84, 9. शान्तः पाठघरादिशून्यः। शिवः सुखदः॥ — p. 84, 11—15. जात ज्ञातिकुलस्निग्धं (CCa नाति°) [यथा स्यान्नाभिज्ञातिः sic!] प्रत्यनुज्ञातासि तपोवनदेवताभिस्तत्प्रणाम भगवतीभ्यः। — [प्राकृते चतुर्थ्यां षष्ठी] — प्रियंवदे आर्यपुत्रदर्शनोत्सुकाया अपि तपोवनं परित्यजन्त्या दुःखेन मम चरणौ पुरोमुखौ॥ [निपतत इति च पाठः] — p. 84, 16—85, 3. न केवलं त्वमेव तपोवनविरहकातरा। त्वया उपस्थितवियोगस्य तपोवनस्याप्यवस्थां प्रेक्षस्व तावत्।

उल्ललति [2]) दर्भकवलं (C °करणं) मृगीनां (sic) परित्यक्तनृत्या मयूराः

अपसृतपाण्डुपत्रा मुञ्चन्ति अङ्गानीव लताः॥

शङ्करस्तु। उद्गीर्णदर्भकवला मृगी परित्यक्तनर्तना मयूरा। इति

---

1) Çankara's MS. has: चित्रकर्मपरिचयेन चित्रलिखने यथाभरणप्रयोगो दृष्टो ऽस्ति तेनैव प्रकारेणात्राभोक्तव्यः। यद्वा। चित्रकर्मसंकल्पः (Cod. चित्र°) मानसो व्यापारः। तेन परिचयेन ममाङ्गेष्वाभरणविनियोगं कुर्वः॥

2) उल्ललइ is a deçi-word of which उग्गिलइ and उग्गिरणा are explanatory glosses. Urdû उलालना to overset, Marâṭhî उलटणें and उलंडणें Urdû उलटना Gujarâtî उलटाववुं to turn over, to upset. Marâṭhî, Gujarâtî उलटी a vomit, vomiting.

पूर्वार्धं पठति[1])॥ — p. 85, 4. तात लताभगिनीं तावन्माधवीमामन्त्रयिष्ये॥ — p. 85, 6—8. लताभगिनि प्रत्यालिङ्ग मां शाखामयैर्बाहुभिरद्य प्रभृति दूरवर्तिनी खलु ते भविष्यामि। ताताहमिवेयं त्वया चिन्तनीया॥ — p. 85, 15. सखि एषा द्वयोरपि युवयोर्हस्ते निक्षेपः॥ — p. 86, 1. अयं [अस्मद्रूपो] जनः कस्मिन्समर्पितः (CCa °र्थि°)॥ — p. 86, 4—6. तातैषा उटजपर्यन्तचारिणी गर्भभारमन्थरा मृगवधूर्यदा सुखप्रसवा भवति तदा मे कमपि प्रियनिवेदकं विसर्जयिष्यथ। मा एतद्विस्मरिष्यथ॥ — p. 86, 8—9. अम्मो। [विस्मये कष्टे वा] को नु खल्वेष पदाक्रान्त इव पुनः पुनर्मे वसनान्ते सज्जति। [वसनान्तं गृह्णाति वा] — p. 86, 14—87, 2. वत्स किं मां सहवासपरित्यागिनीमनुबध्नासि। नन्वचिरप्रसूतोपरतया [प्रसवाव्यवहितकालकृतया] जनन्या विना यथा मया वर्धितोऽसि तथेदानीमपि मया विरहितं तातस्त्वामनुचिन्तयिष्यति। तन्निवर्तस्व वत्स (om. C) निवर्तस्व (om. C)॥ — p. 87, 13—88, 2. सखि नास्माकमाश्रमपदेऽस्ति कोऽपि चित्तवान्यस्त्वया विरह्यमानो न उत्सुको भवति। [न ताम्यतीति च पाठः] प्रेक्षस्व प्रेक्षस्व।

पुटकिनीपत्रान्तरितां व्याहृतां (sic) नानुव्याहरति प्रियाम्
मुखोद्व्यूढमृणालस्त्वयि[2]) दृष्टिं ददाति चक्रवाकः॥

[पुटकिनी पद्मिनी। मृणालिनी पुटकिनीति हारावली(v.165.)। तथोद्व्यूढेति। तथा पूर्वप्रणयानुरूपप्रकारेणेति शङ्करः। अल्पव्याहारे हेतुस्त्वयीति। चक्काओ चक्रवाके स्यादिति देशी] — p. 89, 6. एतावानेव वधूजनानामुपदेशः। जात मा विस्मरिष्यसि॥ — p. 89, 9. तात इत एव प्रियसख्यौ निवर्तयिष्येते॥ — p. 89, 12. कथं

1) According to the Oxford MS., however, Çaṅkara's reading was: मृगी and मयूरी. The reading मयूराः is also mentioned by him: मोरा इति पाठे मयूरा इति।

2) CCa प्रियोद्व्यूढ° The reading of the commentators evidently was तह उव्वूढ° — गुद and तह may be corruptions of some deçi word. As to उव्वूढ compare Hemacandra I, 120.

तातस्याङ्कात्परिभ्रष्टा मलयपर्वतोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि॥ — p. 90, 6. तात वन्दे॥ — p. 90, 8—12. साध्वी एतम् [आगच्छतम्] द्वे अपि युवां समम् [एकदा] एव मां परिष्वजेथाः॥ — सखि यदि कदा चित्स राजर्षिः प्रत्यभिज्ञानमन्थरो भवेत्तदास्मै आत्मनो नामाङ्कितमङ्गुरीयकं दर्शयिष्यसि॥ — अमुना संदेहेन युवयोः कम्पितं मे हृदयम्॥ सखि मा भैषीः। स्नेहः पापमाशङ्कते॥ — p. 90, 14. तात कदा नु खलु तपोवनं प्रेक्षिष्ये॥ (p. 91, 2. C दौस्वान्तं (sic) दुस्वन्तस्यापत्यम् C<sup>a</sup> दौष्मन्तिं (corr.) दुःष्मन्तस्यापत्यम्) — p. 91, 5. जात परिहीयते ते गमनवेला। तन्निवर्तय पितरम्। अथ वा चिरेणापि नैषा निवर्तयिष्यति [अर्थात्याम्]। तन्निवर्ततां भवान्॥ — p. 91, 8. तपोवनव्यापारेण निरुत्कण्ठस्तातो [भविष्यति]। अहं पुनरुत्कण्ठाभागिनी संवृत्ता॥ — p. 91, 15. हा धिक्। अन्तरिता शकुन्तला वनराजिभिः॥ — p. 92, 1. तात शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशावः (CC<sup>a</sup> °मः)॥ — p. 94, 3—5. Compare my paper: de grammaticis Prâcriticis Breslau 1874 p. 22. — p. 94, 11. एवशब्दो भिन्नक्रमे। एवमित्यनुभूयमानप्रकारेणेति शङ्करदुर्बोधः॥ — राज्यं। कर्तृ। उत्कण्ठामात्रं नाशयति। प्रतिष्ठां प्रागवस्थितां ख्यातिं नाशयतीत्यन्ये। राज्यमुत्कण्ठामात्रं ख्यातिं नाशयतीति तु शङ्करस्य कुव्याख्यानम्[1])॥ — p. 95, 7. (भो गोवृन्दारक इति भणितस्य ऋषभस्य परिश्रमो नश्यति)॥ — p. 95, 11—13. (भो वयस्य संगीतशालान्तरे कर्णं देहि। लयशुद्धाया वीणायाः स्वरसंयोगः श्रूयते)। जाने तत्र भवती हंसवती [C दुःस्वन्तभार्या C<sup>a</sup> दुःष्यन्त°] वर्णपरिचयं करोति॥ — p. 96, 1. 2. अभिनवमधुलोभभावितः

---

1) Çaṅkara's MS. has: राज्यं तावदौत्सुक्यमात्रमुत्कण्ठामात्रं प्रतिष्ठां ख्यातिमवसादयति अवच्छिनत्तीति॥ — Both MSS. C and C<sup>a</sup> are incomplete here, omitting p. 94, 15 to 95, 12. जाणे excl.

तथा परिचुम्ब्य चूतमञ्जरीम्। कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतो ऽस्येनां कथम्॥ — भावितामिति शङ्करः। विस्मृत इति कर्तरि क्तः। शकुन्तलोक्तिरियम् (!)। गौतमीपठिता गीतिरियमित्यन्यः (!)। प्रच्छेदकाख्यं [1]) लास्याङ्गमिदम्। तदुक्तम्॥ अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना। वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मत इति॥ — p. 96, 4. भो वयस्य। किं तावदस्या गीतिकाया गृहीतो भवताक्षरार्थः॥ — p. 96, 9—11. यद्भवानाज्ञापयति। भो वयस्य। गृहीतस्त्वया परकीयैर्हस्तैः शिखण्डके [लक्षणाया पुच्छे] अच्छभल्लो [भल्लूकः]। [किरकशब्दः [2]) प्राकृते आत्मीये वर्तते।] तस्मादवीतरागस्येव श्रमणकस्य [परिव्राजकस्य] नास्ति मे मोक्षः॥ — p. 96, 13. का गतिः। [कः प्रकारः] ॥ — p. 97, 16. इत इत एतु देवः। भट्टारक एषो ऽभिनवसंमार्जनरमणीयः संनिहितहोमधेनुरग्निशरणालिन्दकस्तदारोहतु देवः॥ — p. 98, 7. देवस्य भुजशब्दनिर्वृत्ते आश्रमपदे कुत इदम्। [शब्दः ख्यातिः। दण्डेति शाङ्करः पाठः] किं तु सुचरिताभिनन्दिन ऋषयो देवं सभाजयितुम् [अभिनन्दयितुम्] आगता इति तर्कयामि॥ — p. 99, 2—4. अम्मो [विस्मये कष्टे वा] किमिति वामेतरं नयनं मे स्फुरति॥ — जात प्रतिहतममङ्गलम्। शुभानि ते भवन्तु॥ — p. 99, 12. प्रसन्नमुखाः सुस्थकल्पा ऋषयो दृश्यन्ते॥ — p. 99, 16. भट्टा (C भत्ता) [महाराज] दर्शनीयाकृतिः खलु लक्ष्यते॥ — p. 100, 2. हृदय किमेवं वेपसे। आर्यपुत्रस्य भावानुबन्धं स्मृत्वा धीरमवलम्बस्व॥ — p. 101, 9. भद्रमुख वक्तुकामास्मि। न च मे वचनावकाशो ऽस्ति कथयितुमिति॥ — p. 101, 13. 14.

---

1) In Çaṅkara's MS. this kind of song is called प्रच्छादक and it is stated that the quotation is taken from the कविकपठहार. Since the three Calcutta editions also spell प्रच्छेदक this will be the correct reading.

2) Compare my note on Hemacandra II, 147.

नापेक्षितो गुरुजनो ऽनया त्वयापि न पृष्टो बन्धुः
अन्योन्येन वृते किं भणितान्योन्यस्य॥ —
[एक्कक्कमेणेति अन्यान्यमित्यर्थे। एक्कक्कस्सेत्यप्यन्योन्यार्थे। शङ्करस्तु एकैकस्य चरिते किं भणतु एकैकस्मिन्निति (Ç.'s MS. has एक एक°) पठित्वा एकैकस्य एक एकस्मिंश्चरिते अन्योन्यस्य चरिते (Ç. has एकैकस्मिंश्चरिते अन्योन्यस्यान्योन्यचरिते) द्वयोः परस्परविषयकप्रणयकरणे एको ऽस्मद्रूपो जनः किं भणतु अपि तु वचनावसर एव नास्तीत्याह (Ç. न) ॥][1] — p. 101, 15. किं नु खल्वार्यपुत्रो भणिष्यति॥ — p. 102, 1. हुं [रोषसूचने] सावलेपो ऽस्य वचनावक्षेपः॥ — p. 102, 9. हृदय संवृत्ता ते आशङ्का॥ — p. 102, 14. जात मा लज्जस्व। अपनेष्यामि तावत्ते ऽवगुण्ठनम्। ततो भर्ता त्वामभिज्ञास्यति॥ — p. 103, 5. अहो धर्मापेक्षिता भर्तुः। ईदृशं नाम सुखोपनतं स्त्रीरत्नं प्रेक्ष्य को ऽन्यो विचारयति॥ [इत्थीशब्दः स्त्रियां देशी] — p. 103, 11. हा धिक्। कथं परिणय एव संदेहः। भग्नेदानीं मे दूरारोहिणी आशालता॥ — p. 103, 15. हे मान्य प्राचीनविदेशीयपुस्तके ऽयमेव पाठः। अनुमान्यमान इति पाठस्तु विचार्यः॥ — p. 103, 17. त्वं कीदृक्। दुष्टः कापटिकः। दस्युरिति केचित्। दस्युश्चौरः॥ — p. 104, 3—8. इदमवस्थान्तरं गते तादृशे ऽनुरागे किं वा स्मारितेन। अथ वा आत्मा इदानीं मे [मया] शोधनीयः। [शङ्करस्तु शोचनीय इति पठित्वा सदसि तादृशरहस्यप्रकाशनात्त्वया (Ç.'s MS. inserts कुलवधूरहं सदा) शोचनीया भविष्यामीति भाव इत्याह] भवतु। व्यवस्यामि [रहस्यं वक्तुमिति शेषः। वदिष्यामीति शाङ्करः पाठः।] आर्यपुत्र। प्रथमं संशयित इदानीमिय समुदाचारः [कलत्रभावस्य संदिग्धत्वादित्यर्थः] पौरव। युक्तं नाम तव पुरा आश्रमपदे सद्भावोत्तानहृदयमिमं जनं तथा समयपूर्वं संभाव्य सांप्रतमीदृशैरक्षरैः प्रत्याख्यातुम्॥ —

1) Compare my note on Hemacandra III, 1.

p. 104, 9. वारणे शान्तमव्ययमिति कोषः॥ — p. 104, 12. भवतु। परमार्थतो यदि परपरिग्रहशङ्किना त्वया इदं प्रयुक्तं तदभिज्ञानके-नापि तव संदेहमपनेष्यामि॥ — p. 105, 2—5. हा धिक्। अङ्गु-रीयशून्या मे अङ्गुली (CCa °न्यं मे °लम्) ॥ — ज्ञात न खलु शक्रावतारे शचीतीर्थोदकं वन्दमानायाः प्रभ्रष्टमङ्गुरीयकम्। [नः काकौ] — p. 105, 7. अत्र तावद्विधिना दर्शितं प्रभुत्वम्। अपरं कथयिष्यामि॥ — p. 105, 9. नन्वेकदिवसे वेतसलतामण्डपे नलि-नीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् (CCa सन्निहित°)॥ — p. 105, 12—106, 2. तत्क्षणं स मम कृतकपुत्रो मृगशावक उपस्थितः। ततस्त्वयायं तावत्प्रथमं पिबत्वित्यनुकम्पिना उपच्छन्दितः [प्रलोभितः]। न (om. CCa) पुनस्ते ऽपरिचितस्य (CCa ऽपचि°) हस्तादुदकमुपगतः पातुम्। पश्चात्तस्मिन्नेवोदके मया गृहीते कृतस्तेन प्रणयो [विश्वासः]। अत्रान्तरे विहस्य त्वया भणितम्। सत्यं सर्वः सगन्धे [सदृशे संनिहिते वा] विश्वसिति (CCa om. वि)। [गन्धो लेशे तथामोदे गन्धः संबन्धमात्रक इति कोषः] यतो द्वावपि युवामारण्यकाविति॥ — p. 106, 5. महाभाग नार्हसि एवं मन्त्रयितुम्। तपोवनसंवर्धितः (CCa तपोधनसंवर्द्धितः) खल्वयं जनः अनभिज्ञः कैतवस्य॥ — p. 106, 12. अनार्य आत्मनो हृद-यानुमानेन सर्वमेतत्प्रेक्षसे। को नामान्यो धर्मकञ्चुकव्यपदेशिनः [धर्मानुरुद्धात्मकत्वप्रकाशिनः। पवेसिणो इति प्रायः पाठः] तृणाच्छन्नकूपोपमस्य तवानुकारी भविष्यति॥ — p. 107, 12—108, 2 (cpr. p. 107, 18. 19.) यूयमेव प्रमाणं जानीथ धर्मं स्थितिं च लोकस्य। लज्जाविनिर्जिता जानन्ति न किमपि महिलाः॥ [गाथेयं पुराणपुस्तके न दृश्यते नातिचारुः] सुष्ठु। इदानीं स्वच्छन्दचारिणी समुपाश्रिता [अर्थादनेन] या एतस्य पुरुवंशप्रत्ययेन मुखमधुना [मधुवचनस्येत्यर्थः] हृदयशस्त्रधारकस्य [my text has: हृदयप्रस्तारस्य] हस्ताभ्यासमुपगता॥ — p. 108, 3—5 are not mentioned by Candra-

çokhara. — p. 108, 13. हा हा सत्यवादिनिति अधमा नाट्यालङ्कारः॥ — p. 109, 7—10. अहमेतेन तावत्कितवेन विप्रलब्धा। यूयमपि मां परित्यजथ। — वत्स शार्ङ्गरव। अनुगच्छति नः करुणपरिदेविनी शकुन्तला (om. CC*)। प्रत्यादेशपिशुने भर्तरि किं करोतु तपस्विनी [दीना] ॥ — p. 111, 6. भगवति वसुधे देहि मे ऽन्तरम् [अवकाशम्] ॥ — p. 113, 2—12. हण्डे [नीचसंबोधने] [अरे] कुम्भीलक कथय कुत्र त्वया इदं महारत्नभासुरमुत्कीर्णनामाक्षरं राजकीयमङ्गुरीयकं [1]) समासादितम्॥ — प्रसीदन्तु भावमिश्राः। नाहमीदृशस्याकार्यस्य कारकः॥ — किं खलु शोभनो ब्राह्मण इति कृत्वा राज्ञा ते प्रतिग्रहो दत्तः॥ — शृणु तावत्। अहं खलु शक्रावतारवासी धीवरः। [शक्रेति तीर्थभेदः] ॥ — हण्डे पाटच्चर [चौर] किं त्वमस्माभिर्ज्ञातिं वसतिं च पृष्टः॥ — सूचक कथयतु सर्वं क्रमेण मैनं प्रतिबध्नीहि॥ — p. 114, 1—12. यदीश्वर आज्ञापयति। लप रे लप। [वातनशब्द [2]) (sic) ईश्वरे देशो] ॥ — सो ऽहं जालबडिशप्रभृतिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि॥ — विशुद्ध इदानीं ते आजीवः [जीवनोपायः] ॥ — भर्तर्मा एवं भण।

सहजं किल यदपि निन्दितं न खलु तत्कर्म विवर्जनीयम्
पशुमारणं करोति कारणात्षट्कर्मा विदुरो ऽपि श्रोत्रियः [3])॥ —

[सहजं कुलक्रमागतम्। हेतुमाह। विदुरो विद्वान्पशुमारणं करोति। कारणात्। महोक्षं वा महाजं वा श्रोत्रियेत्यादिस्मृतिवचनात् (Yâjñavalkya I, 109)। यजनादीनि षट् कर्माणि। त्रिभिः श्रोत्रिय इत्यादि [4])। तथा च विरुद्धमेतत्परम्परायातं कुर्वतो

---

1) For लाम्रकोए we should, I think, read लाम्रकेलके।

2) I am unable to find out the correct spelling of this word.

3) In the Paris MS. (Chézy p. 242) the original of this reading is mentioned. It ought to be thus corrected: पशुमालि कलेदि कालणा छक्कम्माविदुले वि शोत्तिए — कम्मा stands for कम्म the म being lenghtened metri caussa. The correct translation is षट्कर्माविदुरो.

4) Cpr. Çâk. ed. Böhtlingk p. 245, 11. 12.

नीचस्य मम न दूषणमिति भावः] ॥ — ततस्ततः॥ — तत एकदिवसे मया रोहितमत्स्यः खण्डशः कल्पितः [कृत्तो वा] यावत्तस्योदराभ्यन्तरे इदं महारत्नभासुरमङ्गुरीयकं प्रेक्षे (CC[a] प्रेक्ष्ये) [यावद्वाक्यालंकारे]। पश्चादिह विक्रयार्थमिदं दर्शयन्नेव गृहीतो भावमिश्रैः। एतावानेवास्यागमः। अधुना मारयत (CC[a] °यथ) वा कर्तयत (CC[a] °यथ) वा॥ — p. 115, 1—12. [जानुकेत्यपररक्षकस्य[1]) नाम] जानुक[1]) मत्स्योदरसंस्थितमिति नास्ति संदेहः। यथास्य विस्रगन्ध [आमिषगन्धो] वाति। आगम इदानीमेतस्य विमर्ष्टव्यः (CC[a] विलषितव्यः)। [मत्स्योदरप्रवेशः कथमस्येति ज्ञातव्यमित्यर्थः] तद्राजकुलमेव[2]) गच्छामः॥ — आगच्छ रे ग्रन्थिच्छेदक आगच्छ॥ — सूचक इह गोपुरद्वारे अप्रमत्तौ [अवहितौ] परिपालयतं मां (CC[a] °लयेमां) यावद्राजकुलं प्रविश्य निष्क्रमामि॥ — प्रविशत्वीश्वरः स्वामिप्रसादार्थम्॥ — चिरयतीश्वरः॥ — नन्ववसरोपसर्पनीया राजानो भवन्ति॥ — जानुक स्फुरति मे ऽयं हस्त इमं ग्रन्थिच्छेदकं व्यापादयितुम्। (CC[a] °पार°)॥ — p. 116, 1—11. नार्हति भावो ऽकारणमारको भवितुम्॥ — एषो ऽस्माकमीश्वरः प्राप्तः गृहीत्वा राजशासनम्। तत्कुल्यानां [बान्धवानां। शकुलानां (CC[a] शकुन्त-लानां) मत्स्यानां वा[3])] मुखं प्रेक्षस्व (C प्रेक्षय C[a] प्रेक्षम)। अथ वा शृगालगृध्रबलिर्भव॥ — शीघ्रं शीघ्रमेतम्॥ — हा हतो ऽस्मि॥ — मुञ्चतं जालोपजीविनम्। उपपन्नः किलास्याङ्गुरीयकस्यागमः। अस्मत्स्वामिना यावदस्य कथितम्। [अस्याङ्गुरीयकस्य तत्त्वं कथितमित्यर्थः[4])] यथाज्ञापयतीश्वरः। यमवसतिं गत्वा प्रतिनिवृत्तः खल्वेषः (CC[a] °वृत्तं वपुषः)॥ — भर्तस् (CC[a] भर्त्तुस्) तव

---

1) CC[a] have here जालुक but corrected from जानुक.

2) I may observe here that the Paris MS. reads लाउलं at p. 115, 6 (cpr. Chézy p. 242). Compare my note on Hemacandra I, 267.

3) शउलाणं is = स्वकुल्यानाम्. I do not think that it is said equivocally = शकुलानाम्।

4) Candraçekhara's reading evidently was ञ for म. Compare the critical notes.

केरकं [त्वदीयमित्यर्थः] सांप्रतमस्माकं जीवितम्। [तव क्रीतमिति तु शङ्करव्याख्या विचार्या] ॥ — p. 116, 13—117, 1. उत्तिष्ठ। एष भर्त्रा अङ्गुरीयकमूल्यसंमितः [तुलितः] पारितोषिकस्ते प्रसादीकृतः। तद्गृहाणैतत्॥ — p. 117, 2—12. अनुगृहीतो ऽस्मि। — एष खलु राज्ञा तथानुगृहीतः यच्छूलादवतार्य हस्तिस्कन्धं समारोपितः॥ — ईश्वर पारितोषिकः कथयति महार्हरत्नेन तेनाङ्गुरीयकेन स्वामिनो बहुमतेन भवितव्यमिति॥ — ननु तस्मिन्भर्तुर्महार्हरत्नमिति न परितोषः (CC* °तोषितः)। एतावत्पुनस्तर्कयामि। तस्य दर्शनेन को ऽपि हृदयेष्टो जनो भर्त्रा स्मृत इति यतो (C यथा) मुहूर्तं प्रकृतिगम्भीरो ऽपि पर्युत्सुकमना आसीत्॥ — p. 118, 1—7. तोषित इदानीं भर्ता (CC* भर्त्रा) ईश्वरेण॥ — ननु भणाम्यस्य मत्स्यशत्रोः¹) कृते॥ — भर्तारः इतो ऽर्धं युष्माकमपि सुरामूल्यं भवतु॥ — धीवर महत्तरः सांप्रतं प्रियवयस्यो मम संवृत्तो ऽसि। कादम्बरीसग्धिकायां खलु प्रथममस्माकं सौहित्यमिष्यते। [सग्धिः स्त्री सहभोजनम्। सौहित्यं तर्पणं तृप्तिरिति चामरः (2, 9, 55 and 2, 9, 56)। ... प्रथमशोभिते अस्माकमीप्सिते इत्यन्यो विवृणोति] तच्छौण्डिकागारमेव गच्छामः॥ — p. 118, 10—12. [मिश्रकेशी अप्सरोभेदः] निर्वर्तितः मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यम्। तत्तावदेतस्य राजर्षेर्वृत्तान्तं प्रत्यक्षीकरिष्ये। मेनकासंबन्धेन शरीरभूता मे शकुन्तला। तयापि संदिष्टास्मि [नृपचरितज्ञानार्थमित्यर्थः] ॥ — p. 118, 13—119, 4. किं नु खलूपस्थितक्षणे ऽपि दिवसे निरुत्सवारम्भमिव राजकुलं दृश्यते। अस्ति मे विभवः प्रणिधानेन ज्ञातुम्। किं तु सख्या आदरो (C* सख्यादरो) मया मानयितव्यः। [प्रत्यक्षतो ज्ञानमेव तयोक्तमिति भावः] भवत्वासामेवोद्यानपालिकानां पार्श्वपरिवर्तिनी भूत्वा तिरस्करिण्या प्रच्छन्ना उपलप्स्ये॥ — p. 119, 6—14. अये उपस्थितो मधुमासः॥ आता-

---

1) मच्छली is a deçi-word. Gujarâti माछली Urdû मछली Sindhi मछुरि Marâṭhî मासली „fish".

अहरितवृन्तमुच्छ्वसितमिव वसन्तमासस्य दृष्टश्चूताङ्कुरः क्षणमङ्गलं पश्यामि॥ — [जीवोच्छ्वसितमिति क्व चित्। तदा जीवः प्राणास्तेषामुच्छ्वसितमुदयः। चूताङ्कुरो दृष्टस्ततोऽस्य मङ्गलमपि भविष्यतीति भावः। नियच्छामीति। दृशेः पुलअअवअच्छणिअच्छा [1]) इति प्राकृतसूत्राद् दृशधातोर्णिअच्छादेशः। शङ्करस्तु ऋत्वै क्षणमङ्गलं नियच्छामीति पठित्वा नियच्छामि ददामीत्याह। तद्विचार्यम्] ॥ — परभृतिके किमिदमेकाकिनी मन्त्रयसे॥ — सखि माधुरिके चूतलतिकां [चूताङ्कुरं वा] प्रेक्ष्य उन्मत्तिका खलु परभृतिका भवति॥ — कथमुपस्थितो मधुमासः॥ — मधुरिके तवाप्येष कालो मदविभ्रमोद्गीतानाम्॥ — सखि अवलम्बस्व मां यावदग्रपदोपरि (CC[a] अर्घपदो°) स्थिता भूत्वा एतेन प्रसवेन संपादयामि कामदेवस्य वाचनम् [निवेद्यम्। अर्चनमित्यन्यः] ॥ — p. 120, 1—7. यद्येवं तन्ममापि (अर्धं om. CC[a]) वाचनफलस्य॥ — सखि अभणितमपीदं संपद्यत इति। यत एकमेवेदमावयोः शरीरं द्विधाविभक्तं प्रजापतिना॥ — अम्महे [विस्मये] अप्रबुद्धो (CC[a] यः प्र°) ऽपि चूतप्रसवो बन्धनभङ्गे सुरभिरेष वाति [सुगन्धिर्भवति]। नमो भगवते मकरध्वजाय।

अर्हसि मे चूताङ्कुर दत्तः कामस्य गृहीतचापस्य
सत्याकृतयुवतिलक्षः [2]) पञ्चाधिकः शरो भवितुम्॥ —

[हे चूताङ्कुर मया दत्तः त्वमर्थात्कामस्य षष्ठः शरो भवितुमर्हसि। सत्याकृतं निश्चितं। युवतिरेव लक्षं येन। संस्थापितयुवतिरिति शाङ्करः पाठः] ॥ — p. 120, 11. प्रसीदतु प्रसीदत्वार्यः। अगृहीतार्थे आवाम्॥ — p. 121, 2. [अपरिवार्थे] — p. 121, 5—8. नास्त्यत्र संदेहः। महाप्रभावः खल्वेष राजर्षिः॥ — आर्य कति चिद्

दिवसा मित्रावसुना राष्ट्रियेण भर्तुः पादमूलं प्रेषितयोरावयोरिह प्रमदवने चित्रकर्मार्पयितुम्। [शङ्करस्तु कति चिद् दिवसान्प्रेषिताभ्यामावाभ्यामिह वने चित्रकर्म संपादयितुमिति पठति [1])] अतो न श्रुतपूर्व एष वृत्तान्त आवाभ्याम्॥ — p. 121, 10—13. आर्य कौतूहलमावयोर्योग्येतेन जनेन श्रोतव्यं [योग्यावयोः श्रोतुमर्हतीत्यर्थः] तत्कथयत्वार्यः किं निमित्तं भर्त्रा वसन्तोत्सवो निषिद्धः॥ — ननूत्सवप्रिया राजानो भवन्ति। तद्गुरुणा कारणेनात्र भवितव्यम्॥ — p. 122, 1. श्रुतं राष्ट्रियमुखादङ्गुरीयदर्शनं यावत्॥ — p. 122, 9. प्रियं मे प्रियम्॥ — p. 122, 11. 12. युज्यते॥ — एतु एतु भवान्॥ — p. 123, 5. [प्रतान्तं क्षीणम्। प्रताम्रेति शङ्करः [2])] — p. 123, 7. 8. स्थाने खलु प्रत्यादेशविमानितापि एतस्मात्कारणाच्छकुन्तला क्लाम्यति॥ — p. 123, 12—14. ईदृशानि तस्यास्तपस्विन्या भागधेयानि॥ — हुं [क्रोधे] भूयो ऽपि लङ्घित एष शकुन्तलावातेन। न जाने कथं चिकित्सितव्यः [प्रतिकर्तव्यो] भविष्यति॥ — p. 123, 15. [अन्तःपुरोद्यानं प्रमदवनम्] — p. 124, 4. यद्देव आज्ञापयति॥ — p. 124, 7. 8. कृतं भवता निर्मक्षिकं [मक्षिकाया अप्यभावो निर्जनमित्यर्थः] शिशिरविच्छेदरमणीये एतस्मिन्प्रमदवने आत्मानं विनोदय॥ — p. 125, 1. 2. भो वयस्य तिष्ठ तावद् [इति लोकोक्तिः] यावदेतेन दण्डकाष्ठेन कन्दर्पबाणान्नाशयामि॥ — ननु भवता आसन्नपरिचारिका (CC. प्रसन्न°?) लिपिकरी मेधाविनी संदिष्टा। माधवीलतागृहे इमां वेलामतिवाहयिष्यामि। तत्र मे चित्रफलके स्वहस्तलिखितां तत्र भवत्याः प्रतिकृतिमानयेति॥ — p. 125, 10. इत इत एतु भवान्॥ — p. 125, 11—126, 1. एष मणिपट्टशिलासनाथो माधवीलतामण्डपो विविक्ततया निःश-

---

1) Ç.'s MS. has: आर्य कति चिद् दिवसानि मित्रावसुना विष्टिकरेण (? MS. विष्किकेन) भर्तृ [राज्ञः] पादमूलात्प्रेषिताभ्यामावाभ्यामिह प्रमदवने [कन्यागृहे] कर्म संपादितम्। क्व चित्संपादितमित्यत्र समर्पितमिति पाठः॥

2) Ç.'s MS., however, has: प्रतान्ते नयने यस्य तादृशः॥

ब्दस्वागतेन प्रतीच्छति (CC^a^ पृच्छति) [अनुतिष्ठति] इव त्वाम्। तत्प्रविशामः॥ — लतयान्तरिता प्रेक्षिष्ये तावत्प्रियसख्याः प्रतिकृतिम्। ततो ऽस्या भर्तुरनुरागं बहुमतं निवेदयिष्यामि [बहुमुखं बहुप्रकारमिति शाङ्करः पाठः] — p. 126, 1. तथा लतान्तरितेत्यर्थः। — p. 126, 6—11. अत एव महीपतिभिः (C °पति C^a^ °पतिना ?) क्षणमपि सहृदयाः सहाया न विरहितव्याः (CC^a^ विवाहयितव्याः)॥ —भो न विस्मरामि। किं तु सर्वं कथयित्वा त्वयैवावसाने कथितं यथा परिहासविकल्पितमेतन्न भूतार्थमिति। मया मन्दबुद्धिना तथैव गृहीतम्। अथ वा भवितव्यतात्र बलवती॥ — एवमेतत्॥ — p. 126, 13—15. भो वयस्य किमिदमुपपन्नं तव। न (om. CC^a^) कदा चित्सत्पुरुषाः शोकपरवशा[1]) भवन्ति। ननु प्रवाते ऽपि निष्कम्पा एव गिरयः[2])॥ — p. 127, 7—9. अम्महे [विस्मये] एतस्येदृशी अकार्यपरता संतापयति॥ — अस्ति ते तर्कः [ज्ञानम्] केन तत्र भवतो आकाशसंचारिणा नीतेति॥ — p. 127, 13—15. संमोहः खलु विस्मयनीयः न पुनः प्रतिबोधः॥ — भो यद्येवं तत्समाश्वसितु भवान्॥ — p. 128, 1. 2. न हि मातापितरौ भर्तृविरहितां दुहितरं चिरं प्रेक्षितुं पारयतः। — p. 128, 8. 9. भो वयस्य मा एवं भण। ननु अङ्गुरीयकमेवात्र निदर्शनं [प्रमाणम्] अवश्यंभाविनो ऽचिन्तनीयाः समागमा भवन्तीति॥ — p. 128, 13—16. यद्यन्यहस्तगतं भवेत्तदा सत्यं शोचनीयं भवेत्। सखि दूरे वर्तसे। एकाकिन्येव कर्णसुखान्यनुभवामि॥ — भो इयं नाममुद्रा [अङ्गुरीयकं] केन पुनरुपोद्घातेन [उपक्रमेण] भवता तत्र भवत्या हस्तसंसर्गं प्रापिता॥ — p. 129, 1. मम कौतूहलेनेव वादित एषः॥ — p. 129, 4. ततस्ततः॥ — p. 129, 6. किमिति॥ — p. 129, 12—13. रमणीयः खल्ववधिर्विधिना विसंवादितः॥ — अथ कथं रोहितमत्स्यस्य

---

1) The text has शोकवर्तिन्याः। (Compare B—R s. v. 1 वृत् p. 697, 24).

2) Stanza 159 is not mentioned by Candraçekhara.

मुखं (om. CCa here) बडिशमिव (CCa बडिशमुखं) एतत् (om. CCa) प्रविष्टमासीत्॥ — p. 129, 15—130, 3. युज्यते [एवम्] ॥ — अतः खलु तपस्विन्याः शकुन्तलाया अधर्मभीरोरमुष्य राजर्षेः परिणये संदेहः। अथ वा नेदृशो ऽनुरागो ऽभिज्ञानमपेक्षते। तत्कथमप्येतत्॥ — p. 130, 4. 5. अहमपीदं दण्डकाष्ठमुपालप्स्ये। कथमृजुकस्य मे कुटिलमसि॥ — p. 130, 11—12. अयमेव प्रतिपन्नः यदहं (C om. अहं Ca in corr.) वक्तुकामास्मि॥ — सर्वथाहं बुभुक्षया मारयितव्यः। — p. 130, 15. भट्टारक इयं चित्रगता भट्टिनी [शकुन्तला] ॥ [भट्टिनी द्विजभार्यायां नाट्योक्तौ राजयोषितीति विश्वः] ॥ — p. 131, 4. रुचिरं सुन्दरम्। ओष्ठाभ्यां रुचिरं कान्तिजनकमिति शाङ्करः पाठः॥ — p. 131, 6—10. भो भावमधुरा रेखा [भावो ऽभिप्रायः] स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु। [अनिभृतप्रदेशेति च पाठः] किं बहुना। सत्त्वानुप्रवेशशङ्कयालपनकौतुकं मे जनयति॥ — अहो राजर्षेर्वर्तिकारेखानिपुणता। जाने प्रियसखी मे ऽग्रतो वर्तत इति॥ — p. 131, 24—27. पद्यमिदमनतिमधुरं दाक्षिणात्यपुस्तकेष्वेव दृश्यते॥ — p. 132, 1. सदृशं पश्चात्तापगुरोः स्नेहस्य॥ — p. 132, 6—9. भोस्तिस्र आकृतयो दृश्यन्ते। सर्वा एव दर्शनीयाः। तत्कतमा तत्र भवती शकुन्तला॥ — अनभिज्ञ एव तपस्वी सख्या रूपस्य। मोहचक्षुषो ऽस्य इयं न गता प्रत्यक्षताम्॥ — p. 132, 11—133, 2. तर्कयामि येषा शिथिलकेशोद्गमत्कुसुमेन बद्धस्वेदबिन्दुना वदनेन विशेषनमितशाखाभ्यां बाहुलतिकाभ्यामुच्छ्वसितनीविना वसनेनावसेकस्निग्धपल्लवामशोकलतिकां संश्रिता ईषत्परिश्रान्तेवालिखिता सा तत्र भवती शेषे सख्याविति॥ — p. 133, 8. आर्य माधव्य अवलम्बस्व चित्रफलकं यावदागच्छामि॥ — p. 133, 10—12. भोः किमत्रापरमभिलिखितव्यम्॥ — यो यः प्रियसख्या अभिमतप्रदेशस्तं तमालिखितुकाम इति तर्कयामि॥ — p. 134, 3. 4. यथा मन्त्रयति तथा तर्कयामि पूरितो ऽनेन चित्रफलक

आकृतिभिः कूर्चानतानां तापसानाम्। [कूर्चः श्मश्रु। कूर्चो विकत्थने मध्ये भ्रुवोः श्मश्रुणि कैतव इति विश्वः[1])]।। — p. 134, 7. 8. किमिव।। वनवासस्य कन्यकाभावस्य च सदृशं भविष्यति।। — p. 134, 13—16. किं नु खलु तत्र भवती रत्नवलयशोभिनाग्रहस्तेन मुखमपवार्य चकितेव स्थिता। ही ही भो [हास्योक्तौ] एष दास्याः पुत्रः कुसुमरसपाटच्चरो मधुकरो ऽत्र भवत्या वदनकमलमभिलषति। [पाटच्चरश्चौरः] ।। — p. 135, 2. त्वमेवाविनीतशासने प्रभवसि।। — p. 135, 7. 8. अभिज्ञातं खलु वारितः [खल्वस्य वा। कृतमिति वा पाठान्तरे] — प्रतिषिद्धवामा खल्वेषा ज्ञातिः।। — p. 135, 14. 15. भो एवं तीक्ष्णदण्डस्य ते कथं न भेष्यति। एष तावदुन्मत्तः। अहमप्येतस्य सङ्गेन ईदृश एव संवृत्तः।। — p. 135, 17. धीरमपि ज्ञानं रसो [विप्रलम्भः] व्याकुलयति।। — p. 136, 1. भोश्चित्रं खल्वेतत्।। — p. 136, 3. अहमपीदानीमिव गृहीतार्था। किं पुनर्यथाचिन्तितार्थभावी एषः।। — p. 136, 9. अम्मो [विस्मये] पूर्वापरविरुद्ध एष विधिर्मार्गः।। — p. 136, 13—16. सर्वथा वयस्य मार्जितं (C मार्गितं Ca मार्दितं Wilson 40 मार्ष्टितं) त्वया प्रत्यादेशदुःखं प्रियसख्याः शकुन्तलायाः। प्रत्यक्षो यः सखीजनस्य [न ममेत्यर्थात्[2])] — भट्टारक वर्तिकाकरण्डिकां गृहीत्वा इतो ऽहं प्रस्थितास्मि।। [करण्डिका पुष्पाद्याहारपात्रविशेषः] — p. 137, 2—9. सा च पिङ्गलिकाद्वितीयया देव्या वसुमत्या अहमेवार्यपुत्रस्योपनेष्यामि इति भणित्वा सबलात्कारं गृहीता। [सा करण्डिका] ।। — त्वं कथं विमुक्ता।। — यावल्लताविटपलग्नं देव्याः परिचारिकाञ्चलं मोचयति तावन्निह्नुतो मयात्मा[3])।। — p. 137, 12—138, 6. आ-

---

1) In MS. or. oct. 99 of the Viçvaprakâçakoshaḥ there is added to this: कुविन्दभाण्डे कूर्चः स्यात्कूर्चो दर्भाङ्कुरे ऽपि च ॥

2) Thus all three MSS.-Read: प्रत्यक्षमेव सखीजनस्य [ममेत्यर्थः].

3) Lines 7—9, though not given by Candraçekhara seem to me to be genuine. They are also found in D. Their Sanskrit version is as follows: एतु एतु भट्टिनी ॥ — भोः। अभिधावन्ती एषा अन्तःपुरव्याघ्री मेधाविनीं मृगीमिव कवलयितुमुपस्थिता ॥

त्मानमपि किमिति न भणासि। वयस्य यदि भवानन्तःपुरकूटवा-
गुरातो मोक्ष्यते ततो मां मेघच्छन्नप्रासादे आरोहयिष्यसे[1])। मेघेति
प्रासादनाम] इदं च [अर्थाच्चित्रफलकं] तत्र गोपयामि यत्र पारावतं
वर्जयित्वा न को ऽप्यन्यः प्रेक्षते॥ — अम्मो [विस्मये] अन्यसंक्रा-
न्तहृदयो ऽपि प्रथमसंभावनां रक्षति। स्थिरसौहृदस्तावदेषः॥ —
जयति जयति देवः॥ — p. 138, 8. देव दृष्टा। पत्रहस्तां मां
प्रेक्ष्य प्रतिनिवृत्ता॥ — p. 138, 10. देवामात्यो विज्ञापयति। (अर्थ-
जातस्य बहुलतया om. CCa and Wilson 40) एकं मया पौरकार्यं
प्रत्यवेक्षितम्। तद्देवः पत्रारोपितं प्रत्यक्षीकरोतु॥ — p. 139, 5.
देव इदानीमेव साकेतकपुरस्य श्रेष्ठिणो दुहिता निर्वृत्तप्रसवा
तस्य जायेति श्रूयते॥ — p. 139, 8. यद्देव आज्ञापयति॥ — p. 139,
10. इयमस्मि॥ — p. 139, 14. एवं [इदं वा] नाम घोषयितव्यम्।
देव काले प्रवृष्टमिव शासनमभिनन्दितं जनेन देवस्य॥ — p. 140,
4. प्रतिहतममङ्गलम्॥ — p. 140, 6. असंशयं प्रियसखीमिव हृदये
कृत्वा निन्दितो ऽनेनात्मा भविष्यति॥ — p. 140, 12—15. अप-
रित्यक्तेदानीं ते (all three MSS. तेरू) भविष्यति॥ — आर्ये इदं पत्रं
प्रेषयता द्विगुणानुतापः[2]) कृतो भर्तामात्येन। तन्मेघच्छन्नावस्थितं
संतापनिर्वापकमार्यमाधव्यं गृहीत्वागच्छ॥ — p. 141, 1. सुष्ठु
[प्रशस्तं] यत्त्वया भणितम्॥ — p. 141, 3. अस्माद् दुःस्वप्नात् (sic
C; Ca दुःस्मप्नात् 2. hd. corr. दुःष्मप्नात् Wilson 40 दुष्मप्नात्) ॥ —
p. 141, 7—12. सति खलु दीपे व्यवधानदोषेणान्धकारमनुभवति
राजर्षिः॥ — भट्टारक अलं संतापितेन। वयस्य एव प्रभुः।
अपरासु देवीष्वनुरूपपुत्रजन्मना पूर्वेषामनृणो भविष्यति। न मे
वचनं प्रतिगृह्णाति भर्ता। अथ वानुरूपमेवौषधमातङ्कं निवर्तयति॥

1) Prâkrit आरुहावेसि is Sanskrit आरोहयसि।

2) C प्रेषयतान्विगुणागुनापकृतो C' प्रेषयतान्निर्गुणासतापकृतो W. 40. प्रेषयतान्निर्गुणा-
नुतापकृतो.

— p. 142, 1—6. समाश्वसितु समाश्वसितु भर्ता॥ — किमिदानीमिदं निर्वृत्तं करिष्यामि। अथ वा मया श्रुतं शकुन्तलां संभावयन्त्या देवजन्या स्वयज्ञभागसमुत्सुका देवा एव तथा करिष्यन्ति यथा भर्ता त्वामचिरेण धर्मपत्नीमभिनन्दिष्यति। तन्न युक्तं ममात्र विलम्बितुम्। यावदेतेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि॥ — p. 142, 8. भो अब्रह्मण्यमब्रह्मण्यम्। [अवध्यो ऽहमित्यर्थः] ॥ — p. 142, 10. भट्टारक मा नाम स माधव्यतपस्वी पिङ्गलिकाभिश्चाभिश्चित्रफलकहस्तः प्राप्तो भविष्यति। [ताभिः स हन्यत इति भावः। नाम संभावनायाम्। मा काकौ। मा नामेत्यव्ययसमुदायः संभावनार्थ इति के चित्] ॥ — (p. 142, 13. यद्देव आज्ञापयति om. MSS.) — p. 142, 14. भो अब्रह्मण्यमब्रह्मण्यम्॥ — p. 143, 10. परित्रायतां रक्षतु। अत्र पर्याप्नोत्विति पाठो ऽमरटीकाकृद्भिर्धृतः। पर्याप्नोतु परित्रायतां स्यात्। पर्याप्तिः परित्राणमित्यमरः (3, 3, 5)॥ — p. 144, 9. अभिधावेति (MSS. °धाव्यति) अभिधावनं गतिभेदः। अतिशीघ्रं गच्छेत्यर्थः॥ — p. 144, 11. भोः कथं न भेष्यामि। एष मां को ऽपि पश्चान्मोटितशिरोधरमिक्षुमिव भग्नास्थिं कर्तुमिच्छति। [मोटितं पाटितम्[1])। उच्छु इति उदिक्षुवृश्चिकयोरिति प्राकृतसूत्रात् (Vararuci, I, 15. cpr. Hemac. I, 95.)]॥ — p. 144, 14. भट्टारक इदं सशरं शरासनं हस्तावापश्च॥ — p. 145, 8. परित्राहि। अहं भवन्तं प्रेक्षे। त्वं मां न प्रेक्षसे। तस्मान्मार्जारगृहीत इवोन्दुरुर्निराशो ऽस्मि जीविते॥ — p. 146, 3. शरव्यं लक्ष्यम्। शरव्या इति शङ्करधृतः पाठः॥ — p. 146, 8. भो मनागस्मि एतेन पशुमारणेन मारितुं न पारितः। भवान्पुनरिमं स्वागतेनाभिनन्दति॥ — p. 147, 14. यद्भवानाज्ञापयति॥ — p. 148, 11. हरिचन्दनेन चन्दनभेदेन। वक्षः प्रमृज्य उपलिप्य मयेति मस्तकस्थेनान्वयः। पारिजातमाला पिनद्धा। हरिचन्दनाङ्कमिति क्व चित्॥ — p. 149, 12. अर्थतत्त्वम-

1) मोडिय is, I think, not part. perf. pass. but rather gerund.

त्मानमपि किमिति न भणासि। वयस्य यदि भवानन्तःपुरकूटवा-
गुरातो मोक्ष्यते ततो मां मेघच्छन्नप्रासादे आह्वास्यसे[1])। [मेघेति
प्रासादनाम] इदं च [अर्थाच्चित्रफलकं] तत्र गोपयामि यत्र पारावतं
वर्जयित्वा न को ऽप्यन्यः प्रेक्षते॥ — अम्मो [विस्मये] अन्यसंक्रा-
न्तहृदयो ऽपि प्रथमसंभावनां रक्षति। स्थिरसौहृदस्तावदेषः॥ —
जयति जयति देवः॥ — p. 138, 8. देव दृष्टा। पत्रहस्तां मां
प्रेक्ष्य प्रतिनिवृत्ता॥ — p. 138, 10. देवामात्यो विज्ञापयति। (अर्थ-
जातस्य बहुलतया om. CC[a] and Wilson 40) एकं मया पौरकार्यं
प्रत्यवेक्षितम्। तद्देवः पत्रारोपितं प्रत्यक्षीकरोतु॥ — p. 139, 5.
देव इदानीमेव साकेतकपुरस्य श्रेष्ठिणो दुहिता निर्वृत्तप्रसवा
तस्य जायेति श्रूयते॥ — p. 139, 8. यद्देव आज्ञापयति॥ — p. 139,
10. इयमस्मि॥ — p. 139, 14. एवं [इदं वा] नाम घोषयितव्यम्।
देव काले प्रवृष्टमिव शासनमभिनन्दितं जनेन देवस्य॥ — p. 140,
4. प्रतिहतममङ्गलम्॥ — p. 140, 6. असंशयं प्रियसखीमिव हृदये
कृत्वा निन्दितो ऽनेनात्मा भविष्यति॥ — p. 140, 12—15. अप-
रित्यक्तेदानीं ते (all three MSS. तेरू) भविष्यति॥ — आर्ये इदं पत्रं
प्रेषयता द्विगुणानुतापः[2]) कृतो भर्तामात्येन। तन्मेघच्छन्नावस्थितं
संतापनिर्वापकमार्यमाधव्यं गृहीत्वागच्छ॥ — p. 141, 1. सुष्ठु
[प्रशस्तं] यत्त्वया भणितम्॥ — p. 141, 3. अस्माद् दुःस्वप्नात् (sic
C; C[a] दुःस्मप्नात् 2. hd. corr. दुःष्मप्नात् Wilson 40 दुष्मप्नात्) ॥ —
p. 141, 7—12. सति खलु दीपे व्यवधानदोषेणान्धकारमनुभवति
राजर्षिः॥ — भट्टारक अलं संतापितेन। वयस्थ एव प्रभुः।
अपरासु देवीष्वनुरूपपुत्रजन्मना पूर्वेषामनृणो भविष्यति। न मे
वचनं प्रतिगृह्णाति भर्ता। अथ वानुरूपमेवौषधमातङ्कं निवर्तयति॥

---

1) Prâkrit सद्दावेसि is Sanskrit शब्दापयसि।

2) C. प्रेषयताद्विगुणानुतापः कृतो C[a] प्रेषयतानिर्गुणानुतापकृतो W. 40. प्रेषयतानिर्गुणा-
नुतापकृतो.

तमस्मै उपहर॥ — तावदेतेनैव क्रीडिष्यामि॥ — मुञ्चैनम्॥ — p. 156, 5—8. भो न मां गणयसि। को ऽत्र ऋषिकुमारकाणां मध्ये [तिष्ठतीति शेषः]। भद्रमुख एहि तावत्। मोचय एतेन दुर्मोचहस्तग्राहेण (cdd. °स्तप्राहः Ca corr. °स्तग्राहः) डिम्भकेन (om. cdd.) बाध्यमानं बालमृगेन्द्रम्॥ — p. 156, 14. भद्रमुख न खल्वेष ऋषिकुमारकः॥ — p. 157, 5. आश्चर्यमाश्चर्यम्॥ — p. 157, 7—9. अस्य बालकस्यासंबद्धे ऽपि भद्रमुखे संवादिनी आकृतिरिति विस्मितास्मि। अपि च बालशीलो ऽपि भूत्वापरिचितस्य न ते प्रतिलोमः संवृत्तः। [अपरिचितस्य ते वचनेन प्रकृतिस्थो ऽयं संवृत्त इति पाठान्तरे] — p. 157, 12. पौरव इति॥ — p. 157, 16. नियतमद्वितीयं मुनिव्रतं येषु॥ — p. 158, 2. 3. यथा भद्रमुखो भणति। अप्सरःसंबन्धेन पुनरस्य बालस्य जननी देवगुरोस्तपोवने प्रसूता॥ — p. 158, 6. कस्तस्य धर्मदारपरित्यागिनो नाम कीर्तयिष्यति॥ — p. 158, 10—13. सर्वदमन पश्य शकुन्तलावण्यम् [अथ च शकुन्तलावर्णं त्रूपम्]॥ — कुत्र सा मे आर्या माता। [अज्जुकाशब्दो (CCa अज्ज° or अत्तु°) मातरि देशीय इति शङ्करः]॥ — नामसादृश्येन उपच्छन्दितः [प्रलोभितो] मातृवत्सलः॥ — एतस्य मयूरस्य रमणीयत्वं प्रेक्षस्वेति भणितो ऽसि॥ — p. 159, 3—4. अन्तिके रोचते मे चटुलक एष मयूरः। [अन्तिका भगिनी ज्येष्ठा। अत्रार्तिकेत्यपि साध्वित्याभिधानिकाः। अन्तिका धात्रीति शङ्करः]॥ — अम्मो [कष्टं] रक्षागण्डो ऽस्य मणिबन्धे न दृश्यते। [गण्डको वीद इति ख्यातो जातुषभेदः। मणिबन्धे करमूले]॥ — p. 159, 7. मा खलु मा खलु [संप्रत्यसीति शेषः] कथं गृहीतमेवानेन॥ — p. 159, 10—13. शृणोतु महाभागः। महाप्रभावा खल्वेषापराजिता नाम सुरमहौषधिः एतस्य दारकस्य जातकर्मसमये भगवता मारीचेन दत्ता। एतां किल मातापितरावात्मानं (C °त्माना Ca W. 40 °त्मनो) च (om. cdd.) वर्जयित्वापरो भूमिपतितां न गृह्णाति॥

— p. 160, 1. सा सर्पी भूत्वा तं दशति॥ — p. 160, 3. अनेकशः॥ — p. 160, 6. सुव्रते एहि। इमं वृत्तान्तं नियमव्याकुलायै शकुन्तलायै निवेदयावः॥ — p. 160, 8. मुञ्च माम्। आर्यासकाशं गमिष्यामि॥ — p. 160, 10. दुःस्मन्तो (thus C and C[a] 1. hd.; C[a] 2. hd. दुःष्मन्तो) मम तातो न खलु त्वम्॥ — p. 160, 13—15. विकारकाले ऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न मे आसङ्ग आत्मनो भागधेयेषु। [आसङ्गशब्दः प्राकृते आश्वासार्थः] अथ वा यथा मिश्रकेश्या मे आख्यातं तथा संभाव्यते इदम्॥ — p. 161, 4—8. न खल्वार्यपुत्रो ऽयम्। तत्कः खल्वेष कृतरक्षामङ्गलं मे दारकं गात्रसङ्गेन दूषयति॥ — आर्ये एष को ऽपि मां (om. MSS.) पुत्रक इत्यालपति॥ — p. 161, 11. हृदय समाश्वसिहि। प्रहार्य निवृत्तमात्सर्येण अनुकम्पितास्मि दैवेन। आर्यपुत्र एवैषः॥ — p. 162, 4. अलकः केशभेदः। लोला अलका यत्र तत् (om. MSS.)। पाटलौष्ठेति च पाठः॥ — p. 162, 5. 6. आर्ये क एषः॥ — वत्स भागधेयानि पृच्छ॥ — p. 162, 7. प्रत्याख्यानेति निराकरणविप्रियम्॥ — p. 162, 12—15. उत्तिष्ठतूत्तिष्ठत्वार्यपुत्रः। नूनं मम सुखप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणतमासीत्। येन सानुक्रोशो (C[a] °क्रोधो) ऽप्यार्यपुत्रस्तथा संवृत्तः॥ — अथ कथमार्यपुत्रेण स्मृतो ऽयं दुःखभागी जनः॥ — p. 163, 6. आर्यपुत्र तदिदमङ्गुरीयकम्॥ — p. 163, 8. संपादितं खल्वनेन यत्तदार्यपुत्रस्य प्रत्ययकारणं दुर्लभं मे आसीत्॥ — p. 163, 11. नास्य विश्वसिमि। आर्यपुत्र एवैनं धारयतु॥ — p. 164, 5. लज्जे खल्वार्यपुत्रेण सह गुरुजनसमीपं गन्तुम्॥ — p. 164, 13. संभावनीयप्रभावा आपन्नाकृतिः॥ — p. 165, 8. अप्रतिहतरथो भव॥ — p. 165, 12. जात भर्तुर्बहुमता भव। अयं च ते दीर्घायुरभयपक्षमलंकरोतु। तदत्रोपविशत॥ — p. 167, 7—10. दिष्ट्या अकामप्रत्यादेशी आर्यपुत्रः। न पुनः सत्यं मां स्मरति। अथ वा न श्रुतो भवेदयं शून्यहृदयया शापः। यतः सखीभिरत्यादरेण

संदिष्टं भर्तुरङ्गुरीयकं दर्शयिष्यसीति॥ — p. 168, 14—16. अनया पितृदुहितुर्मनोरथसंपत्त्या कण्वोऽपि तावद्विज्ञातार्थः क्रियताम्। मेनका पुनरत्र मां परिचरन्ती सुसंनिहितैव (CCa °तेन) — p. 169, 1. मम मनोरथो व्याहृतो भवत्या॥ — 170, 7. श्रुतिमतां वेदविदाम्। परिगता आश्रिता शक्तिः। सकलभुवनशासनानुग्रहक्षमं सामर्थ्यं यस्य। नित्यशक्तिरित्यर्थः। यद्वा। परिगतशक्तिः सगौरीकः। आगमे शक्तिपदेन गौर्यभिधानात्। आत्मभूरिति क्व चित्पाठः॥

---

## CORRECTIONS.

P. 16, 4 r. ॥२२॥ (23). — p. 16, 9 r. ॥२३॥ (22). — p. 21, 15 r. सव्रीडा°. — p. 29, 2 r. ह्री माणाहे। भो हृद्. — p. 31, 18 r. cdd. (?) y. — p. 38, 15 r. १५. — p. 38, 16 r. किसल°. — p. 51, 11 r. पत्रा°. — 59, 18 r. °रूढां. — p. 75, 11 r. मूर्ध्नि. — p. 84, 15 r. १५. — p. 86, above r. ८६. — p. 87, 10 r. तेन ह्रीमां. — p. 98, 10 r. P. 63. — p. 118, 5 r. शंपदं. — p. 123, 4 r. श्यामाप°. — p. 162, 10 r. ॥२१०॥ (183).

I beg to read everywhere क्खु instead of खु and to separate everywhere चित् from the preceding word.

PRINTED BY E. J. BRILL, LEIDEN.

